# श्रीमहालक्ष्मीस्तोत्रम् विष्णुपुराणान्तर्गतम्

श्रीगणेशाय नमः ।
श्रीपराशर उवाच
सिंहासनगतः शक्रस्सम्प्राप्य त्रिदिवं पुनः ।
देवराज्ये स्थितो देवीं तुष्टावाब्जकरां ततः ॥ १॥

इन्द्र उवाच
नमस्ये सर्वलोकानां जननीमब्जसम्भवाम् । var  सर्वभूतानां
श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थिताम् ॥ २॥

पद्मालयां पद्मकरां पद्मपत्रनिभेक्षणाम्
वन्दे पद्ममुखीं देवीं पद्मनाभप्रियामहम् ॥ ३॥

त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी ।
सन्ध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वती ॥ ४॥

यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥ ५॥

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च ।
सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरितम् ॥ ६॥

का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः ।
अध्यास्ते देवदेवस्य योगचिन्त्यं गदाभृतः ॥ ७॥

त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ।
विनष्टप्रायमभवत्त्वयेदानीं समेधितम् ॥ ८॥

दाराः पुत्रास्तथाऽऽगारसुहृद्धान्यधनादिकम् ।
भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम् ॥ ९॥

शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम् ।
देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ॥ १०॥

त्वमम्बा सर्वभूतानां देवदेवो हरिः पिता । var  त्वं माता सर्वलोकानां
त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम् ॥ ११॥

मा नः कोशस्तथा गोष्ठं मा गृहं मा परिच्छदम् ।
मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥ १२॥

मा पुत्रान्मा सुहृद्वर्गान्मा पशून्मा विभूषणम् ।
त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलाश्रये ॥ १३॥

सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः ।
त्यज्यन्ते ते नराः सद्यः सन्त्यक्ता ये त्वयाऽमले ॥ १४॥

त्वयाऽवलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः ।
कुलैश्वर्यैश्च पूज्यन्ते पुरुषा निर्गुणा अपि ॥ १५॥

स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ।
स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः ॥ १६॥

सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ।
पराङ्गमुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ १७॥

न ते वर्णयितुं शक्ता गुणाञ्जिह्वाऽपि वेधसः ।
प्रसीद देवि पद्माक्षि माऽस्मांस्त्याक्षीः कदाचन ॥ १८॥

श्रीपराशर उवाच
एवं श्रीः संस्तुता सम्यक् प्राह हृष्टा शतक्रतुम् ।
शृण्वतां सर्वदेवानां सर्वभूतस्थिता द्विज ॥ १९॥

श्रीरुवाच
परितुष्टास्मि देवेश स्तोत्रेणानेन ते हरे ।
वरं वृणीष्व यस्त्विष्टो वरदाऽहं तवागता ॥ २०॥

इन्द्र उवाच
वरदा यदिमेदेवि वरार्हो यदि वाऽप्यहम् ।
त्रैलोक्यं न त्वया त्याज्यमेष मेऽस्तु वरः परः ॥ २१॥

स्तोत्रेण यस्तथैतेन त्वां स्तोष्यत्यब्धिसम्भवे ।
स त्वया न परित्याज्यो द्वितीयोऽस्तु वरो मम ॥ २२॥

श्रीरुवाच
त्रैलोक्यं त्रिदशश्रेष्ठ न सन्त्यक्ष्यामि वासव ।

दत्तो वरो मयाऽयं ते स्तोत्राराधनतुष्टया ॥ २३॥

यश्च सायं तथा प्रातः स्तोत्रेणानेन मानवः ।
स्तोष्यते चेन्न तस्याहं भविष्यामि पराङ्ग्मुखी ॥ २४॥

श्रीपाराशर उवाच
एवं वरं ददौ देवी देवराजाय वै पुरा ।
मैत्रेय श्रीर्महाभागा स्तोत्राराधनतोषिता ॥ २५॥

भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेः पुनः ।
देवदानवयत्नेन प्रसूताऽमृतमन्थने ॥ २६॥

एवं यदा जगत्स्वामी देवराजो जनार्दनः ।
अवतारः करोत्येषा तदा श्रीस्तत्सहायिनी ॥ २७॥

पुनश्चपद्मा सम्भूता यदाऽदित्योऽभवद्धरिः ।
यदा च भार्गवो रामस्तदाभूद्धरणीत्वियम् ॥ २८॥

राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु चावतारेषु विष्णोरेखाऽनपायिनी ॥ २९॥

देवत्वे देवदेहेयं मानुषत्वे च मानुषी ।
विष्णोर्देहानुरुपां वै करोत्येषाऽऽत्मनस्तनुम् ॥ ३०॥

यश्चैतशृणुयाज्जन्म लक्ष्म्या यश्च पठेन्नरः ।
श्रियो न विच्युतिस्तस्य गृहे यावत्कुलत्रयम् ॥ ३१॥

पठ्यते येषु चैवर्षे गृहेषु श्रीस्तवं मुने ।
अलक्ष्मीः कलहाधारा न तेष्वास्ते कदाचन ॥ ३२॥

एतत्ते कथितं ब्रह्मन्यन्मां त्वं परिपृच्छसि ।
क्षीराब्धौ श्रीर्यथा जाता पूर्वं भृगुसुता सती ॥ ३३॥

इति सकलविभूत्यवाप्तिहेतुः स्तुतिरियमिन्द्रमुखोद्गता हि लक्ष्म्याः ।
अनुदिनमिह पठ्यते नृभिर्यैर्वसति न तेषु कदाचिदप्यलक्ष्मीः ॥ ३४॥

॥ इति श्रीविष्णुपुराणे महालक्ष्मी स्तोत्रं सम्पूर्णम् ॥